# DAIVATABRAMHANA

AND

# SHADBINGSHABRAMHANA

OF THE

## SAMAVEDA

WITH THE COMMENTARY OF

## SAYANACHARYA

EDITED AND PUBLISHED BY

*PANDIT JIBANANDA VIDYASAGARA, B. A.*

*Superintendent, Free Sanskrit College, Calcutta.*

SECOND EDITION



CALCUTTA:

PRINTED AT THE SARASWATI PRESS.

প্রিণ্টার শ্রীকৃষ্ণমোহন মুখোপাধ্যায়। ২০ নং কামাপুকুর লেন।

1881.

To be had from Pandit Jibananda Vidyasagara, B. A.

Superintendent Free Sanskrit Colleg, Calcutta.

सामवेदस्य

# दैवतब्राह्मणम् ।

तथा

# षड्विंशब्राह्मणम् ।

सायणाचार्य्यकृतभाष्यसहितम् ।

---

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च ।

---

कलिकातानगरे

सरस्वती यन्त्रे मुद्रितम् ।

---

इं १८८।

# भाष्यकृतोभूमिका ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्क महीपतिः ।
आदिशत्सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
व्याख्याता ब्राह्मणानान्तु व्याख्यानं सम्प्रवर्त्तते ॥ ५ ॥
अष्टौ हि ब्राह्मणा ग्रन्थाः प्रौढं ब्राह्मणमादिमम् ।
षड्विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत् ॥ ६ ॥
आर्षेयं देवताध्यायो भवेदुपनिषत्ततः ।
संहितोपनिषद्वंशो ग्रन्था अष्टावुदीरिताः ॥ ७ ॥
तत्राद्या ब्राह्मणग्रन्थाश्चत्वारो व्याकृताः पुरा ।
देवताध्यायसंज्ञस्तु ग्रन्थो व्याख्यायतेऽधुना ॥ ८ ॥
साम्नां निधनभेदेन देवताध्ययनादयम् ।
ग्रन्थोऽपि नामतोऽन्वर्थो देवताध्याय उच्यते ॥ ९ ॥
तत्राद्ये बहुधा साम्नां देवताः प्रीतिकीर्त्तिनाम् ।
द्वितीये छन्दसां वर्णास्तेषामेव च देवताः ॥ १० ॥
तृतीये तन्निरुक्तिश्चेत्येष खण्डार्थसंग्रहः ॥ ११ ॥

# दैवतब्राह्मणम् ।

हरि ओम् ।

तत्रादौ साम्नां निधनभेदेन देवताभिधानाय ता एवानु क्रमते—

१ । अग्निरिन्द्रः प्रजापतिः सोमोवरुण-स्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी ।

एता सामदेवताः इति शेषः

तत्रादावग्निदेवत्यानि सामान्याह—

२ । इडानिधनानि पदनिधनानीकारणि-धनानीत्याग्नेयानीति ।

निधनं नाम पञ्चभक्तिकस्य सप्तभक्तिकस्य साम्नोऽन्त्या भागः । सर्वत्र सामतश्चतुर्विधः स्वरोनिधन मिडाद्यागिति । स एवान्तर्निधनं बहिर्निधनमिति द्वेधा । तत्र निधना दित्रितयव्यतिरिक्तस्य स्वर इति रूढ्या नामधेयम् । इडा निधनानीति—कालेयरौरवादीनि । साम्नाक्षरनैरपेक्षेण ऋगन्त्यपदान्येव यत्र निधनस्थानीयानि तानि पदनिध-नानि यौधाजय संहितादीनि । ईकारनिधनानि वैरा जादीनि । उक्तत्रिविधनिधनानि यानि सामानि तान्या-ग्नेयानि अग्निदेवताकानि ।

अथैन्द्रदैवत्यान्याह—

३। सर्वाणि निधनवन्त्यैन्द्राण्यन्यान्यादिष्टेभ्यः।

आदिष्टेभ्य इडानिधनादिकेभ्यो वक्ष्यमाणेभ्यो व्यतिरिक्तानि यानि निधनवन्ति सन्ति तानि सर्वाण्यैन्द्राणीति जानीयात्।

अथ प्रजापतिदैवत्यान्याह—

४। सर्वाणि स्वराणि प्राजापत्यानि—

स्वर्यमाणम् उक्तलक्षणम् ऋगन्त्याक्षरं हाइ कारं च स्वरनिधनं तद्वन्ति प्राजापत्यानीति।

साम स्वयमेवोदाहरति—

५। यथा वामदेव्यम्।

एतदधिकारयुक्तस्योदाहरणम्।

अथ सौमदैवत्यान्याह—

६। ऋक्सामानि सौमानि—

यानि ऋगक्षराणि स्तोभादिरहितानि केवलतानमात्रयुक्तानि तान्येव ऋक्सामानि।

स्वयमेव तान्युदाहरति—

७। यथौशनकावे।

अथ वरुणदैवत्यान्याह—

८। वाङ्निधनानि वारुणानि—

वाङ्निधनवन्ति वाङ्निधनानि ।

उशालक्षणं नाम उदाहरति—

९ । यथा यज्ञायज्ञीयम् ।

अथ त्वष्टृदेवत्यान्याह—

१० । अक्षरानुसाराणि त्वाष्ट्राणि—

अक्षरमनुसर्पन्ति येषु तानि तथोक्तानि ।

तान्युदाहरति—

११ । यथा वारवन्तीयन्त्वाभिवर्त्तश्च ।

अथाङ्गिरोदेवतानां लक्षणमाह—

१२ । स्वःपृष्ठान्याङ्गिरसानि ।

अभिसोमास आयव इत्यादिषु गातव्यानि स्वःपृष्ठानि
आङ्गिरसानि ।

अथ पूषदेवत्यानां लक्षणमाह—

१३ । स्वर्णिधनानि पौषाणि ।

काशीतदैवोदासप्रभृतीनि स्वर्णिधनानि ।

अथ सरस्वतीदेवतान्याह—

१४ । कयानश्चित्र आभुवदापवस्वसहस्त्रिणमिति वाङ्निधने सारस्वते ।

यद्यपि वाङ्निधनानि वारुणानीति पूर्वमेवोक्तं
तथाप्य नयोरुत्पन्ने एव वाङ्निधने सारस्वते, अतएव तद्-
व्यतिरिक्तानां वारुणत्वादस्यापुनरुक्तिः ।

अथैन्द्राग्नलक्षणमाह—

१५। य आनयत्परावत इत्यैन्द्राग्ने।

य आनयदित्यत्र ये सामनी उत्पन्ने, ते इन्द्राग्नीदेवत्ये।

अथाग्नेयैन्द्र्यो' सामनी आह—

१६। सुतं रयिष्ठाः सहोरयिष्ठा इत्याग्नेयैन्द्रे।

उपनोहरिभिः सुतमित्यस्यान्ते 'सुतꣳरयिष्ठाः'—इत्येतद्गीयते, तथा 'सहोरयिष्ठा'—इत्येतदपि। ते उभे आग्नयैन्द्रे एव।

निधनभेदेन सर्वेषां साम्नां सामान्येनाग्न्यादीन्द्राग्निपर्य्यन्ता. दश देवता. द्रष्टव्या। आग्नेयैन्द्रयोरनिर्द्देशेऽप्यैन्द्राग्नस्यैव विपर्य्यासादनन्यत्वम्।

अथ प्रकारान्तरेण निधनयशात् सत्‌सास्ना देवताभिधानाय ता एवानुक्रमते—

१७। वसवो रुद्रा आदित्या विश्वेदेवाः।

यथाग्न्यादयः प्रत्येकं सामदेवता, यस्यादयोऽपि सङ्घात्मकाः सर्वेषां साम्नां निधनचतुष्टयभेदेन देवता।

अथ निर्द्देशक्रमेणैतासां सामानि विभज्य दर्शयति—

१८। वसूनाꣳस्वराणि रुद्राणान्निधनवन्त्यादित्यानामैडानि विश्वेषां देवानां वाङ्निधनानि।

स्वरनिधनादिभेदेन सामान्यभागानां चातुर्विध्यम्। स्वरादित्रितयव्यतिरिक्तस्य निधनमिति कृत्वा नामधेयमिति पूर्वमेवोक्तम्. एतेषां लक्षणानि च प्रदर्शितानि।

ननु साम्नां पूर्वमेवाग्न्यादिदेवताकत्वं व्यवस्थितम्। इतः पर मपि सर्वाण्याग्नेयादीनीत्यादिना वक्ष्यते च॥ किमर्थं वस्वादिदेवताकथनमिति तत्राह—

## १९। यथा भूयस्त्वेन प्रदेशावर्त्तन्त द्रव्यन्तराणि।

भूयसोभावो भूयस्त्वम्—सर्वग इत्यर्थः। तदनतिक्रम्य प्रदेशाः साम्नां वस्वाद्युपदेशा वर्त्तन्ते, अत उक्ताग्नेयाद्यपेक्षया वस्वादिदेवतान्यभ्यन्तराणि, पृथक् पृथक् देवताभिधानात् पूर्वोक्ताना बाह्यत्वम्, इदानीं सद्वयोभिधानादान्तरत्वम्॥

अथोक्तप्रकारेण देवताभिधानेऽपि निगूढतर साम्नां देवतापरिज्ञान प्रकारमाह—

## २०। अथान्तरतराणि सर्वाण्याग्नेयानि सर्वाण्यैन्द्राणि सर्वाणि प्राजापत्यानि सामानीत्यन्तरतराणि।

पूर्वन्तु साम्नां चतुर्धा विभागेन देवताचतुष्टयाभिधानमुक्तम् इह तु सर्वेषामपि साम्नामग्न्यादिदेवताकत्वकथनादन्तरतरत्वम्॥

अथोक्तप्रकारादपि लघुतरं देवतापरिज्ञान प्रकार-माह—

२१। अथान्तरतमानि सर्वाणि ब्राह्मणानि सामानीति सर्वान्तरतमानि।

ऋक्सामाभ्यां ब्राह्मणस्यादौ दृष्टेस्तद्देवताख्यानेन तस्यैव प्रतिपाद्यत्वात्सर्वेषां ब्राह्मणत्वम्।

अथ साम्नां देवतासम्बन्धविषये ज्ञातव्यं रहस्यमाह—

२२। अथोपनिषत्।

कैषोपनिषदिति दर्शयति—

२३। ऋग्वै माता साम पिता प्रजापतिः स्वरः।

ऋक् प्रसिद्धा। साम गीत्यात्मकम्। स्वरः क्रुष्टादिः। (१८) अस्त्वेवं, किं ततः ? इत्यत आह—

२४। तद्यान्यृक्त आख्यायन्ते मातृतस्तान्याख्यायन्तेऽथ यानि सामत आख्यायन्ते पितृतस्तान्याख्यायन्तेऽथ यानि स्वरत आख्यायन्ते प्रजापतितस्तान्याख्यायन्ते।

ऋक्त आख्यातानि यज्ञायज्ञीय वारवन्तीय प्रभृतीनि। तेषामृगवयवभूतपदेनाख्यानात्। सामत आख्यातानि यौधाजयप्रभृतीनि। स्वरत आख्यातानि वामदेव्यादीनि। एव

समस्तस्योद्गीथस्योद्गानकर्म्मणः ऋक् साम स्वरा इति त्रयो-ऽवयवास्ते पृथक् पृथक् मात्रादिसम्बन्धेन प्रसिद्धा भवन्ति ।

अथोद्गीथस्योक्तविधत्वं प्रशंसति—

२५ । स वा एष उद्गीथो बन्धुमान् बन्धु-मत्यः ।

बान्धवा मात्रादय स्तद्वान् । न केवलं बन्धुमत्त्वं किन्तु तेषामन्तर्भूतश्च ।

उक्तार्थज्ञानं शंसति—

२६ । बन्धुमान् बन्धुमत्यो भवति जानन्ति ह वा एनं पितृतश्च य एवं वेद ।

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थ-प्रकाशे देवताध्यायाख्ये पञ्चमे ब्राह्मणे प्रथमः खण्डः ।

पूर्व्वखण्डे साम्ना बहुधा देवता उक्ताः ॥ अथ तदाश्रयभूतानां छन्दसां देवता अभिधास्यति । इदानीं तेषां वर्णानभिधातुं प्रति जानीते—

१ । अथातश्छन्दसां वर्णाः ।

वक्ष्यन्त इति शेषः ॥

अथ गायत्र्यादिभेदेन वर्णविशेषानाह—

२ । शुक्ला गायत्री रूपेण सारङ्गरूप-सुष्णिक् पिशङ्गं ककुभारूपं कृष्णमानुष्टुभं

ततः। रोहितं दूहतीनां तु नीलं पाङ्क्तं ततः पुनः सुवर्णं त्रिष्टुभारूपं गौरं जागत मुच्यते।

सारङ्ग प्रथम'। श्येता सप्ताः (१)। एतेषां अक्षर-सङ्ख्या तु "अथ छन्दांसि गायत्र्युष्णिगित्युपक्रम्य चतु-र्विंशत्यक्षरादीनि चतुरुत्तराणि" अनुक्रमण्यां मुक्तत्वात् चतुर्विंशत्यक्षरप्रभृति चत्वारि चत्वार्यक्षराधिका उष्णिगा-दिषु द्रष्टव्या. (२)॥

अथातिजगतीप्रभृतीनां वर्णानाह—

३। अतो यान्यन्यानि छन्दांसि श्यावं तेषां ततः पुनः। नकुलन्त्वेकपदानां द्विपदां बभ्रुरुच्यते सारङ्गशुक्लकृष्णारूपाण्यृग्यजुःषा-मब्राह्मान्विताः।

अतो यान्यन्यानि गायत्र्यादिसप्तच्छन्दोभ्यो व्यतिरि-क्तानि अतिजगतीप्रभृतीनि उत्कृतिपर्यन्तानि (३) तेषां श्याव कपिशवर्णं विद्यात्। 'अथेन्द्रो जुषस्वप्रवहेत्यादीक पदानां नकुल नकुलजाति वर्णं जानीयात्। द्विपदाना-मिमागुक मित्यादीनां बभ्रुवर्णम्। तथा यानि ऋग्यजुरा-दिब्राह्मणगतानि गायत्र्यादीनि तेषाञ्च क्रमेण सारङ्गादयो वर्णा द्रष्टव्या।

अथ यज्ञसम्बन्धिनां गायत्र्याद्युपयन्मानां मन्त्राणां

देवता वक्ष्यामीति प्रतिजानीते—

४। यज्ञे यज्ञे प्रयोक्तव्यास्तेषां दैवत उच्यते ।

अथानुक्तानां विराजां वर्णं दर्शयति—

५। विराजः पृश्नयो विद्यात् ।

पिबासोममिन्द्रमन्दतुत्वेत्येवमाद्या विराजः पृश्नि वर्णा इति जानीयात् ।

अथाग्नेर्गायत्र्यादिमन्त्रश्रवणे किमर्थमित्याद्यङ्गरे तत्तात्पर्यमाह—

६। दैवतं तत उत्तरम् ।

तत उक्तात् उत्तरं वाक्यजातं देवताभिधानमित्यर्थः ।

अथाग्न्यादीनां गायत्र्यादिदेवतात्वसम्बन्धपरं मन्त्रद्वयम् तत्र प्रथमं मन्त्रमुदाहरति—

७। अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहया सविता सम्बभूव अनुष्टुभा सोम उक्थैर्महस्वान् बृहस्पतेर्बृहती वाचमावत् ।

अग्नेः सयुग्वा सहायभूता गायत्री अभवत् । प्रजापतेर्मुखात् देवतासु मध्ये अग्निरजायत । छन्दःसु मध्ये गायत्री च उभावप्य जायेतामित्यर्थः । तथाच तैत्तिरीयकं प्रजापतिरकामयत प्रजायेयेति । स मुखतस्त्रिवृतं निरमिमीत । तमग्निर्देवतान्वसृजत गायत्री छन्दः इति ।

यदा। सयुग्वित्य, त्तरल सम्बध्यते। अग्नेः सकाशा-द्गायत्री अजायत इत्यर्थः। तथा उष्णिहया उष्णिकछ-न्दसा सह, सयुग्वा सह युज्यमाना ककुप् सविता देवः सम्बभूव तस्मात्प्रजापतेर्यज्ञे 'आपश्चापि हलन्तानामिति' (१०) वचनादुष्णिहशब्दादापप्रत्ययः। तथा उकथैर्मन्त्रैः मरुत्वान् तेजस्वी सोमः अनुष्टुभा अनुष्टुप् छन्दसा सार्द्धं तस्मादेव प्रजापते रजायत। तथा बृहस्पतेर्वाच वाक्यं बृहती छन्द अभवत् अचरत् अगच्छदा। बृहत्या सार्द्धं बृहस्पतिरपि तस्मात्प्रजापतेर्यज्ञे जायतेत्यर्थः॥

अथ द्वितीय मन्त्रमुदाहरति—

**८। विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुवेह भागो अह्नः। विश्वान् देवाञ्जगत्या विवेश तेन चाकॢप्रऋषयो मनुष्याः।**

अपि च मित्रावरुणयो र्द्वयोर्विराट् छन्दः अभिश्रीः प्राशस्त्यया आसीत्। अथ इन्द्रस्य त्रिष्टुप् छन्द अह्नो भागो माध्यन्दिनसवनाख्ययाभूत्। तथा जगतीच्छन्दः विश्वान् देवान् आ विवेश प्रविष्टा। तेन अग्न्यादिदेवताकेन गा-यत्र्यादिच्छन्द उपनिबद्धेन ऋषयो मनुष्या मरणशीला मानवाश्च चाकॢप्राः चकॢपिरे कॢप्ताः सृष्टा आसन्नित्यर्थः। अतो गायत्र्या अग्न्यादिदेवताकेन गायत्र्यादि छन्द इत्युक्तं भवति॥

अथोपरितनानां छन्दसां देवतामाह—

९। प्राजापत्या अतिच्छन्दसो विच्छन्दसो वायुर्देवताः। पुरुषो द्विपदानां दैवतं ब्राह्म एकपदाः स्मृताः।

अतिच्छन्दसः अतिजगत्यतिशक्वर्यादयोऽतिपूर्वाः; विच्छन्दसः शक्वर्यष्टिधृतय। यद्वा। सर्वा एता अतिच्छन्दसः। विच्छन्दसो गायत्र्यादय एवैकद्व्यक्षरन्यूनाधिकभूताः। ताश्च क्रमेण प्रजापतिवायुर्देवताकाः छिपदा एकपदाश्च सर्वाभिधानसमये दर्शिताःताश्च क्रमेण पुरुष-ब्रह्म-देवताकाः.

अथ अनिर्दिष्टायाः पङ्क्तेर्देवतामाह—

१०। वासवी पङ्क्तिः।

वासवी वसुदेवताका ॥

अथ छन्दसामुक्तदेवताकत्वे प्रमाणमुपन्यस्यति—

११। स तु न मन्येतैतद्दैवत्या एवैतेषु छन्दस्सृचो भवन्तीति छन्दसां ह्येतद्दैवतमिति।

तु शब्दः शङ्काव्यावृत्त्यर्थः : स पुरुष न मन्येत, छन्दसां मत्वद्देवताकत्वे प्रमाणं नास्तीति न शङ्केत। यथा एतेषु गायत्र्यादिच्छन्दःसु एतद्दैवत्या एव अग्न्यादिदेवताका एव ऋचः प्रायेण सम्भवन्ति तथा छन्दसां (ह शब्दोऽप्यर्थे) अग्न्यादिदेवताक ऋगाश्रयाणामपि। छन्दसामेतद्दैवतं ह एता अग्न्यादिदेवता भवितु युक्ताः खल्वित्यर्थः।

इति श्रीदेवताध्यायाख्ये प्रथमे ब्राह्मणे द्वितीयः खण्डः ॥

अथ सामोर्थयाणा छन्दसां कथनप्रसङ्गेन तेषा मेव निर्व्वचनं दिदर्शयिषु स्तादौ प्रतिजानीते—

१। अथातोनिर्वचनम्।

अथ साम्नां देवताभिधानानन्तरम् अतः यतोनिर्व्वचनेन निरुक्त गायत्र्यादि छन्दो गायत्र साम जागतं सामेति सामनामसूपयुज्यते अतो निर्वचन प्रकृति प्रत्यय विभागेन व्युत्पादन प्रदर्श्यत इति शेषः॥

तत्र गायत्र्या दर्शयति—

२। गायत्री गायतेः स्तुतिकर्मणः।

गै शब्दे, शब्द स्तवनं, गायति स्तौति, प्रकाशयति देवतानिति गायत्री॥

अथ ब्राह्मणप्रदर्शनेनैव प्रकारान्तरेण निर्वचन दर्शयति—

३। गायतोमुखादुदपतदिति ह ब्राह्मणम्

'गायतः वेदसारं शब्दयतः प्रजापतेर्मुखात् एषा वेद सारभूता उदपतत् उदगच्छद् तस्मा अतोपि गायत्रीत्यर्थः॥ अत्रैव 'गायत्री'विद्यायां प्रकारान्तरेण निरुक्तो गायत्री शब्दः।। गायन्तं त्रायते पालयति च सा गायत्री। या वै खलु गायति च—'यथा संसारे मा क्लिश्यत, तदुच्छित्तये मामेव भजध्वमिति' स्वयं शब्दयति च।, तथा कुर्व्वाण दुःखात्मकात् संसारात् त्रायते पालयति च सा गायत्रीति निरुच्यतइति शेष॥ 'तद्यद्गायत्स्तस्मेत्तस्माद्गायत्री नामेति'

करणात् स्वाभिमतमर्थमाह—

६। ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वा।

ककुप् कुब्जशब्दौ कुजतेरुब्जतेर्वोत्पन्नौ। कुज कौटिल्य प्रतिष्ठाविलेखनेषु। 'उब्ज' आर्जवे—अत्र न्यग्भावार्थः। ततः कौटिल्य न्यग्भावार्थक धातुद्वयार्थस्यात्र सम्भवात् ककुप शब्दः।

अथानुष्टुभो निर्वचनमाह—

७। अनुष्टुबनुस्तोभनात्।

स्तोभतिर्हार्थः। गायत्रीतस्समासरपादहष्टे।

उक्तार्थे ब्राह्मणसम्मतिं दर्शयति—

८। अन्वस्तौदिति हि ब्राह्मणम्।

निरुक्ते प्रकारान्तरेण ब्राह्मणवाक्यमुदाहृतम्। 'गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम्'—इति।

अथ पिपीलिकामध्याया निर्वचनं यत्, पिपीलिका शब्दस्य निर्वचनमाह—

९। पिपीलिका पेलतेर्गतिकर्मणः।

न ह्यसौ चपलमुदाप्ते।

इदानीं तच्छन्दोनिर्वचनं दर्शयति—

१०। पिपीलिकामध्येत्यौपमिकम्।

पिपीलिका नाम उभयतः स्थूला मध्ये कृशा इतिव

ाणिविशेषः तन्मध्यमिव मध्यं यस्याः सा तथोक्ता। मध्यम-
पदलोपी समासः। तस्यास्तानुमध्यत्वमनुक्रम्य "पकादशिनोः
नर: षट्कस्त्रनुशिरा, मध्ये चेत् पिपीलिकामध्येत्युक्तम्।

अथ बृहत्या निर्वचनमाह—

११। बृहती परिवर्हणात्।

एष्या अनुष्टुभः सर्वपादे एकैकाक्षरवर्धनात् बृहत्त्वम्।

अथ विराजो निर्वचनं बहुप्रकारमाह—

१२। विराड्विरमणाद्विराजनाद्वा।

विराट् शब्दः "रम् क्रीड़ायां"—"राज् दीप्तौ"—"राध
साध संसिद्धौ"—इति त्रिभ्यो धातुभ्योऽन्यतरेणापि निष्पा-
द्यते। धातुत्रयार्थस्य तस्मिन् सम्भवात्।

अथ निर्वचनमाह—

१३। पङ्क्तिः पञ्चिनी पञ्चपदा।

पञ्चसंख्यायोगात् पङ्क्तिशब्दः, पञ्चत्वप्रदर्शनं पञ्च
पदेति।

अथ त्रिष्टुभो निर्वचनं दर्शयति—

१४। त्रिष्टुप् स्तोभ इत्युत्तरपदा।

स्तोभ इति स्तुतिकर्मोत्तरपदं यस्याः सा त्रिष्टुप्,
अस्त्युत्तरपदं पूर्वपदस्य—त्रिशब्दस्य।

किं प्रवृत्तिनिमित्तमिति स्वयमेव प्रश्नोत्तरमपि ब्रूते—

१५। का तु त्रिता, सा तीर्णतमं छन्दो
भवति।

अस्य त्रिता त्रित्वं कथं स्यादिति प्रश्नः। अत्रोत्तरम्—
स्तोभतमं छन्दो भवतीति। पूर्वस्मो महत्त्वात् तकारस्य लोपः। स्तोभतमं तरतेर्वा पूर्वपदम्। उभयार्थोऽस्य-
विस्तरणात् स्तोभनार्थे तिर्यक्त्वम्।

त्रिष्टुक्छन्दः पूर्वपदमित्याह—

## १६। त्रिष्टद्वज्रस्तस्य स्तोभमिवेत्यौपमिकम्।

उभयत्रिककोटित्वात् वज्रस्त्रिवृत्। तस्य स्तोभमिवे-
त्युपमाप्रधानोऽयं निर्देशः। "यत्त्रिवृतः स्तोभं त्रिष्टुभ-
स्त्रिष्टुप्त्वमिति ब्राह्मणम्।

अथ जगतीच्छन्दो निर्वक्ति—

## १७। जगती गततमं छन्दो जलजगतिर्भ-
वति क्षिप्रं गतिर्जगन्तत्राकुर्वन्नसृजतेति हि
ब्राह्मणम्।

अतिजगत्यादीनि छन्दांसि निर्वक्तुमुपक्रमते—

## १८। अतिच्छन्दांश्छन्देरर्थे।

छन्दसीऽर्थं यानिनैयाति च्छन्दसोऽपि यानं सुगमभिति
भावः। तथाच जगतीमतिक्रम्याधिकाक्षरत्वेन या वर्तते
सैवातिजगतीत्येवं कल्पितम्। अथेदानीं छन्दस एव निर्व-
चनं वक्ति—

## १९। छन्दांसि छन्दयतीति वा।

'छन्दसंवरणे (चु० उ०)' छदयति वर्णान्। तथाच

नैरुक्तम्—छन्दांसि छदनात् (दै॰ १, १) इति।

तत्र गायत्र्यादिषु यथानियम-चतुर्विंशत्याद्यक्षराभावे तासां नामान्तरता माह—

२०। निचृन्निपूर्वस्य चृतेः।

एकाक्षरन्यूनासु गायत्र्यादिषु निचृदिति। चर्चयति सन्दीपयति ऋग्गतभावानिति चृत् छन्दः, निकृष्टमेकाक्षरेण हीनं निचृत्। तथाच पिङ्गलः—"ऊनाधिकेनैकेन निचृद्भुरिजौ (३ ५९) इति।

तथा एकाक्षराधिक्ये सञ्ज्ञान्तरमाह।

२१। भरणाद् भुरिक् उच्यते।

एकाक्षरेण भरणाद् चतुर्विंशत्यात्मगायत्र्यादाविति शेषः।

अथ सामसु गायत्रस्य प्रशस्ततया तद्देवतोपसंहारे स्तौति

२२। अथातो गायत्रमाग्नेयं भक्त्या भवति देवानां वर्षीणां वा परमेष्ठिनो वा प्राजापत्यस्य साम।

अथेत्यानन्तर्यवचनः अत इत्यधिकारार्थः। आग्नेयम् अग्निदैवतम्, यद् गायत्रं नाम साम, तद्धि देवाना वा ऋषीणां वा परमेष्ठिनः प्राजापत्यस्य वा सर्वस्यैवेत्यर्थः 'भक्त्या' सम्भजनेन भवति भवेत्।

गायत्र-साम्नः किं मूल मित्याह—

२३। सावित्री गेयम्।

सावित्रि नामर्चि तत्सवितुर्वरेण्यमित्यत्रैव गेयम् प्रश
स्तमि तदतु अन्यत्रापि गेयमूहतः

ननु गानग्रन्थेषु कथं तत्रोपलभ्यतइत्याह—

२४। यत्रागीतम्।

यत्र सावित्रिनामर्चि गानग्रन्थादौ प्रगीतम् तत्रैव गानम् प्रशस्तमित्यर्थः।

किन्तदिति स्वरूपं दर्शयति—

१ २ २ १ २१

२५। तत्सवितुर्वरेणियोम्। भार्गोदेवस्य

२१ २ २

धीमा हीर्। धियोयोनः प्र। चो १ ऽ २ १ ऽ

१ १ २ १ १ १

२ इम्। आर् हायो आ ३ ४ ५।

सावित्रगास्यर्कस्वरूपस्य उत्तरार्चिकस्य षष्ठप्रपाठकोय-तृतीयार्द्धे श्रुतस्य दशमसूक्तस्य प्रथमपाठतो ज्ञेय.। व्याख्या-तथापि तत्रैवेति॥

॥ इति तृतीयः खण्डः॥

॥ समाप्तञ्च दैवत ब्राह्मणम्॥

---

# षड्विंशब्राह्मणम् ।

---

ओं नमः सामवेदाय ।

ओं ब्रह्म ह वा इदमग्रे सुब्रह्म आसीत्तत, सुब्रह्मो-ऽकामयदथह देवा यज्ञेन ब्रह्म पर्यगृह्णताग्निर्वै ब्रह्म साया-देत्य, सुब्रह्म तद्देवा यज्ञस्य सन्धायन्त्वेच्छन्नेव वै यज्ञस्य रश्मिर्येवैव चक्रुस्तस्मादुत्करे तिष्ठन्सुब्रह्मण्य सुब्रह्मण्या माह्वयति सुब्रह्मण्यो ३ऽम् सुब्रह्मण्यो३ऽम् सुब्रह्मण्यो३ मिति प्रिय मिव विराह्व विपण्या (त्या) हि देवा इन्द्रागच्छेति यन्द्राहैन्द्रागच्छेत्येतद्वा अस्य प्रत्यक्ष नाम तेनैवैनं तदा ह्व यति हरिव आगच्छेति पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्याꣳहीदꣳसर्वं हरति मेधातिथेर्मेषेति मेधातिथि ह काण्वायनꣳमेषोभूत्वा जहार वृषणश्वस्य मेन इति वृष णश्वस्य ह मेनस्य मेनका नाम दुहिता स ताꣳ इन्द्रश्चकमे गौरावस्कन्दिन्निति गौरमृगो ह स्म भूत्वावस्कन्दारण्या द्राजानं पिबत्यहल्यायै जारेत्यहल्याया ह मैत्रेय्या जार आस कौशिकब्राह्मणेति कौशिको ह स्मैनं ब्राह्मण उप-ह्वयेति गौतमब्रुवाणेति देवासुरा ह संयत्ता (त्ता) आसꣳ स्तानन्तरेण गौतम श्रथाम तमिन्द्र उपेत्योवाचेह नो भवांस्य (च्छ) सञ्चरत्विति नाहमुवाह इत्यथाह भवतो रूपेण चराणीति यथा मन्यस इति स यत्तद्गौतमो वा

ब्रुवाणउपचचार गौतमरूपेण वा तदेतदाह गौतमेतीन्द्र है सुत्यामागच्छ मघवन्निति तद्यथाऽदो ब्रूयादित्यहे व. पक्तास्मि तदा गच्छातेत्येवमेवै तद्देवेभ्यः सुत्यां प्राह देवा ब्राह्मण इति देवा ह्येव देवा अथ हैते मनुष्यदेवा ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते मनुष्यदेवा आहुतय एव देवानां दक्षिणा मनुष्यदेवानामाहुतिभिर्ह देवान् प्रीणाति दक्षिणाभिर्मनुष्यदेवाञ्छुश्रुवषोऽनूचानान् ब्राह्मणान् प्रीणाति ॥१॥

इति षड्विंशब्राह्मणे प्रथमप्रपाठके

प्रथमखण्डः ।

अथ यत्र सुब्रह्मण्यः सुब्रह्मण्यामाह्वयत्ये तस्मिन् ह कालेऽसुररक्षाꣳसि देवानां यज्ञमजिघाꣳसकस्ते देवा निह्नवमेवा कुर्वत ब्रह्मोꣳ३ सुब्रह्मोꣳ३मिति तानादित्य. पर्जन्य पुरो वलाको भूत्वाऽभि प्रैक्षन् अथ्याऽगन्या विद्युताऽहꣳस्तदाहु. स्त्री सुब्रह्मण्या ३ऽऽ पुमा ३ऽऽऽनपुꣳसका ३ऽऽऽमिति सर्वमेवेति ब्रूयात् यत्पर्जन्य. पुरो वलाको भूत्वाऽभिप्रैक्षन् पुमान् यदभ्रा यदगन्या तेन स्त्री यद्विद्युता तेन नपुꣳसक तस्मात् सर्वमेवेति ब्रूयात्तदाहुः स्त्रीकुम्ब्रह्मण्या३ऽऽऽ यजूः ऽऽऽऽम्रामा३ऽऽऽ इति सर्वमेवेति ब्रूया इष इवास्या नामधेयꣳसुब्रह्मण्येति तस्मा इदन्मन्त्र एव स्वस्य निगदभूतो भवति तस्माद्यस्तु मामकारिण कुर्वन्ति यथान्यैः सामभिस्तस्मात् साम तस्मात् सर्वमेवेति ब्रूयात्तदा यतत् सुब्रह्मण्यामाहृय यजमानं वाचयति भामि सुब्रह्मण्ये तस्यास्ते पृथिवी पाद इत्याह यान्येव पृथिव्यामसुररक्षाꣳसि तान्येव तेनापहते भामि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्ष

पाद इत्याह यान्येवान्तरिक्षेऽसुररक्षाणि तान्येव तेनाप हन्ति सामि सुब्रह्मण्येत्यस्मै द्यौ. पाद इत्याह यान्येव दिव्यसुररक्षाणि तान्येव तेनापहन्ति सामि सुब्रह्मण्येत्यस्मै दिशः पाद इत्याह यान्येव दिक्ष्वसुररक्षाणि तान्येव तेनापहन्ति परो रजास्ते पञ्चमः पाद इत्याह परोरजसो वै ब्रह्मणः स्थानं तदेतदाह मा न इयमूर्ज्जं धुक्ष्वेत्याहेदमेवास्मा ऊर्ज्जं दुग्धे वीर्यमन्नाद्य धेहीत्याह वीर्यमेवास्मा अन्नाद्य दधाति ब्रह्मयोर्वै नामैतन्नाम यत् सुब्रह्मण्या तस्मात् प्रातरनुवाक उपाकृते विसृष्टिकृति च यज्ञे सुब्रह्मण्यः सुब्रह्मण्या माह्वयत्येष वै यज्ञ ब्रह्म चाप्नोति य एतदन्तो युक्तं स ब्रह्मण्याय ददाति ब्रह्मणा चैवास्य श्रिया च यज्ञं समर्धयति य एव वेदार्थो स्वत्वाहुर्यज्ञावगत यज्ञानवगतं सर्वस्यैव प्रायश्चित्तिरिति तस्मादेव विद सुब्रह्मण्य कुर्वीत नानेवं विदम् । २ ॥

इति षड्विंशब्राह्मणे प्रथमप्रपाठके
द्वितीयखण्डः ।

एकच्छन्दः प्रातःसवनं तस्मादेकपात् पुरुषो हरं तत्र्यं प्रत्यन्येन तिष्ठति त्रिच्छन्दा माध्यन्दिनः पवमानस्तस्मात् त्र्यधः प्राणा द्वे गायत्रयाः सामनी तस्मादयमधरेण प्राणेन करोति द्वे बृहत्यां तस्मादयमुत्तरेणैक त्रिष्टुभि साम तस्मादेकैव नाभिः प्रायानामिव तु विष्ठति रथ यदेव तत ऊर्ध्वं तानि पृष्ठानि बार्हतान्येकगायत्रीकाणि तस्माद्बृहत्य एव परिमयो बृहत्य एव कीकसाः पृष्ठमभिसमायन्त्यथ यदेव तत ऊर्ध्वं स आर्भवः पवमानः

प्राणो गायत्री श्रोत्रे उष्णिक्ककुभौ वागनुष्टुप्चक्षुर्जगती
पुष्टिर्यद्बृहद् गायत्र्याᳫ सामनी तस्मादयं प्राणेन करोति
प्राणिति चापानिति चैक छन्दः ककुबुष्णिहौ द्वे सामनी
तस्मात् समानᳫ सच्छ्रोत्रं द्वेधैव शृणोति द्वे अनुष्टुभि सामनी
तस्मादयं वाचा करोति सत्यं चानृतं च बृहत्यैकं जगत्यां
साम तस्माद्द्वे अक्षिणी सती समानं पश्यतो न हि पश्या
द्रायन्त पश्यत्यथ यदेव तत् सर्व्वं मूर्द्धा तद्यज्ञायज्ञीयं
मूर्द्धा स्वाना भवति य एवं वेदाथ इव वा अन्यान्यज्ञानुर-
परीव मूर्द्धाथ इवाश्रा अन्ये स्वा भवन्त्युपरीव स्वाना भ-
वति य एवं वेद यज्ञो वा अथ यज्ञ इत्याहुरेष वावजात
एषोऽयवलुप्तजरायुरेष आलिङ्गीनो य एतं वेदमनुब्रूते यदा
वा एतं वेदमनुब्रूतेऽथैनᳫ शृण्वन्त्यसावन्ववोचतेति तद्वै स
जायते जनाधरा गायत्री प्रातः सवने प्रजानां प्रजात्या
जनादिव हि प्रजा प्रजायन्ते जनाधरा गायत्री
पृष्ठेषु वामदेव्ये यजमानं लोक एव स मध्ये
हि यज्ञस्य यजमान ऊनाधरा गायत्री सन्धिते प्राणापा-
नयो रुचार जनादिव हि प्राणापानावुच्चरत जनाधर यु-
ज्ञायज्ञीय प्राणानामुत्सृष्ट्यै यो हि पूर्णमुपधमेद् यदि
प्रतीयाद् विपतेद् यदि न प्रतीयाद् विपद्येत तदाहुः सव-
नानाञ्च वा एत उद्राना प्राणानाश्चोत्सृष्टिरिति ॥ २ ॥

इति षड्विंशब्राह्मणे प्रथमप्रपाठके
द्वितीयखण्डः ।

अध्वर्य्यो विल्वाङ्गोद्गाता साम मे निवेद होतो प्रातरनु-
वाकमुपाकरो रिति सोऽन्वयु प्राह स ह्रतो व्रजति स पु

वैया द्वारा हविर्धाने प्रपद्यते स दक्षिणस्य हविर्धानस्योत्तरं चक्रमभ्यपश्रयमाण उदङ्ङासीनो विश्वरूपा गायति षव्वं वै स्तोत्रं विट्शस्त्र सर्वेणैवास्मै विश्रमनुवीर्यं मनुवर्त्मान करोत्यथो भुतश्रस्तयो रेव समारम्भायाऽव्यवस्रंसाय सन्तत्या एतद्ध्स्माह श्वासो मैत्रेयः प्राह्णे वा श्र्वार्ह पापवसीयस व्याकरिष्यामीति सह स्म सदस्येवोपवसथ्येऽहन्युदङ्ङासीनो विश्वरूपा गायति तदुपवादोऽप्यभूयौ किं स्तुतं स्तोत्र होता प्रातरनुवाकेनान्वशंसीदिति स ब्रूयादकारिष महन्नद् यन्मम कर्म होतारं पृच्छतेति होतः । कि स्तुत स्तोत्र प्रातरनुवाकेनान्वशसीरिति स ब्रूयादकारिष महन्नद् यन्मम कर्मोद्गातार पृच्छतेत्युद्गातः । किं स्तुत स्तोत्रं होता प्रातरनुवाकेनान्वशसीरिति स ब्रूयादकारिष महन्नद् यन्मम कर्मा गासिष यदेयमिति तं चेद्ब्रूयुः समा वै त्वमगासीर्नज्योति रिति स ब्रूया ज्योतिस्तेन येन ज्योति ज्योतिस्तेन येनर्ग् ज्योतिस्तेन येन गायत्री ज्योतिस्तेन येन छन्दो ज्योतिस्तेन येन साम ज्योतिस्तेन येन देवता ज्योतिरेवाह मगासिषं न तमो युष्मांस्तु पाप्मना तमसा विध्यानीत्याह पाप्मनैवैनांस्तत्तमसा विध्यति युञ्जे वाच शतपदीमित्याह वाग्वावशतपदी ऋच् शतपदी शतसनिमेव तदात्मानञ्च यजमानञ्च करोति गाये सहस्रवर्त्तनीति साम वै सहस्रवर्त्तनि सहस्रसनिमेव तदात्मानञ्च यजमानञ्च करोति गायत्र त्रैष्टुभ जगदिति गायत्र वै प्रातः सवन त्रैष्टुभं माध्यन्दिन सवन जागतं तृतीयसवनं सवनान्येतद् यथा स्थान यथा रूप कल्पयति

विश्वारूपाणि सम्भृतेति विश्वमेव तद्वित्तमात्मने च यज
मानाय च सम्भरति देवा ओकासि चक्रिर इत्योकोहा-
स्मिन् यज्ञ कुरुते य एव वेदाथ तमुगाह स्मवै पुरा का-
श्यपा उद्गायन्त्यथह युवानमनूचान कुसुरुविन्दमौद्दालकि
ब्राह्मण उद्गीथाय वव्रे ते होचु परि वै नौयमालिन्यमा-
दत्ते हन्तेममनुव्याहरामेति त हानुव्याहरिष्यन्त उपनि
षेदु स होवाच ब्राह्मणा नमोवोस्तु प्राह्णे वा अह यज्ञ
समस्थापयन्त्यथा तु वै यामस्य यातस्य शीर्ष वा भग्न वा-
नुसमाभरे देव वा अह यज्ञस्यातोऽधिकरिष्यामीति ते हहि-
ह्यत्योत्तस्थु क इदमस्मा अवोचदिति ॥ ४ ॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके
चतुर्थखण्ड प्रथमाध्याय ।

इन्द्रो हवै विश्वामित्रायोकथमुवाच वसिष्ठाय ब्रह्म
वा उकथमित्येव विश्वामित्राय मनो ब्रह्म वसिष्ठाय तद्वा
एतद्वासिष्ठ ब्रह्मापि हैव विद वा वासिष्ठ वा ब्रह्माण
कुर्वीत तद्यथो भयवर्तनिना रथेन या या दिश प्रार्थ-
यते ता तामभिप्राप्नोत्यव मेतेनोभयवर्तनिना यज्ञेन य
काम कामयते तमभ्यश्नुतेऽर्धाद्वैभाग्वै मन प्राणाना स
यद्व्याहरति वाचि तन्मन प्रतिष्ठापयति तद्यथैकवर्त
निना रथेन न काञ्चन दिश व्यश्नुते तादृगेतद यावद् ऋचा
यजुषा साम्ना कुर्युस्तावद् ब्रह्मा वाच यमो बुभूषेत् प्र
जापतिर्वा इमा स्त्रीन्वेदानसृजत स एत स्पष्टानाधिन्वस्ता
नभ्यपीडयत्तेभ्यो भूरेव सरित्यचरद् भूरित्यृग्भ्यो चरत्
सोऽय लोकोभवद् भुवरिति यजुर्भ्यो क्षरत् सोऽन्तरि-

ऽन्तरिक्षलोको भवत् स्वरिति सामभ्योऽक्षरत् स. स्वर्गोलोको भवत्तद्यत्वृच उल्वणं क्रियेत गार्हपत्यं परेत्य भू. स्वाहेति जुहुया दय वै लोको गार्हपत्योऽय लोक ऋग्वेदस्तद्वा इमश्च लोक ऋग्वेदश्च स्वेन रसेन समर्द्धयत्यथ यदि यजुष्ट उल्वण क्रियेताऽन्वाहार्यपचन परेत्य भुवः स्वाहेति जुहुया दन्तरिक्षलोको वा अन्वाहार्य-पचनोऽन्तरिक्षलोको यजुर्वेदस्तद्वा अन्तरिक्षलोकश्च यजुर्वेदश्च स्वेन रसेन समर्द्धयत्यथ यदि सामत उल्वणं क्रियेता हवनीय परेत्य स्व स्वाहेति जुहुयात् स्वर्गो वै लोक आहवनीय. स्वर्गो लोक. सामवेदस्तद्वै स्वर्गं च लोकं सामवेदश्च स्वेन रसेन समर्द्धयत्यतो यावयतमग्निर्न्व वा कतमश्चिद्योल्वण क्रियेत सर्वेष्वेवानुपर्याय जुहुयात्तथा ह्यस्य यज्ञो स्वनः स्वर्गस्ततो भव त्यथस्त्वा हाभिवाहा वेधा यज्ञ उत्क्रामति देवान् दिवं तृतीयमन्तरिक्षं मनुष्यांस्तृतीय पृथिवी पितॄंस्तृतीय तदभिमृशेद् देवान् दिव यज्ञो गात्ततो मा द्रविणमष्टन्तरिक्ष मनुष्यान्यज्ञो गात्ततो मा द्रविणमष्टु पृथिवी पितॄन् यज्ञो गात्ततो मा द्रविणमष्टु यत्र क्व च यज्ञो गात्ततो मा द्रविणमष्टिति तद्वा आत्मानश्च यजमानश्च स्वेन रसेन समर्द्धयति वरुणो वा एतद्विष्णो यज्ञमुपार्पयति यद्यज्ञ उल्वण क्रियते तदप हपनिनवेथयो रोजसा स्कभिता रजाꣳसि वीर्येभि वीरतमा शविष्ठाया पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणापूर्वहूतौ स्वाहेति तद्वा आत्मानश्च यजमान च स्वेन रसेन समर्द्धयति ॥५॥

इति षड्विंशब्राह्मणे प्रथम-प्रपाठके पञ्चमखण्डः ।

ये विराजमतियजन्ते विराजमेव त ईप्सन्तोऽमुष्मिं ल्लोके श्राम्यन्त्यथ य एनामर्वागभ्युवन्ति विराजमेव त ईप्सन्तोऽमुष्मिँल्लोके श्राम्यन्ति तेषां तथा श्राम्यताᳪ सुकृतं क्षीयते न हि तदमुष्मिँल्लोके शक्नुवन्ति यदस्माल्लोकात् कृत्वा प्रयन्त्येतद्ध स्माहोद्दालक आरुणिः कथन्ते यजेरन् कथं वा याजयेयुर्यज्ञस्य श्रेष्ठेन न नन्दन्ति नन्दन्ति यत् समृद्धेनेत्यह वा य काले यजे याह काले याजयेय योऽह यज्ञस्य श्रेष्ठेन नन्दामि नन्दामि यथासमृद्धेनेत्यपि ह स्माहैव कामाद् यज्ञस्य वर्द्धयति भूयसे रूपाणि रूपा ऽऽस्पृशामि भिष कृत्स्नेत्येतद्ध स्म वै तद्विद्वानाह यावद्वा ऋचा होता करोति होतर्य्येव तावद्यज्ञो यावद्यजुषाऽध्वर्युरध्वर्य्य्येव तावद् यावत्साम्नोद्गातोद्गातर्य्येव तावद् ब्रह्मण्येव तावद्यज्ञो यत्रोपरतास्तस्मात्तस्मिन्नन्तर्द्धौ ब्रह्मा वाचंयमो बुभूषेत् स यदि प्रमत्तो व्याहरेदेतां वा व्याहृतीमनमानुद्रवेद्भूर्भुवः स्वरिति वैष्णवीं वर्चमिदं विष्णुर्विचक्रम इति राजो ह मितस्य मर्कटोᳪ शूनाटाय नच माप्रुवे म हारुणि राइतिमुपाव्योवाच पुनर्वैनानियपास्यतो वावमृतो यपपत्रस इति स होवाच किᳪ होष्यमीति प्रायश्चित्तमिति किं प्रायश्चित्तमिति सर्वप्रायश्चित्तमिति किᳪ सर्वप्रायश्चित्तमिति महाव्याहृती रेव मघयन्निति सहोवाचोमारुणे यदाहुति मनूचिपे काय नु विद्वाश्वकथमर्कटोᳪ शूनादत्तेति स होवाच यद्यावगत यद्यानवगतᳪ सर्वस्यैव प्रायश्चित्तिरिति तथा देतामेव जुहुयादपि वा ज्ञात यदनाज्ञातं यज्ञस्य क्रियते मिथ्यर्नं तदस्य कल्पयत्वᳪ

हि वेथ यथा यथं स्वाहेत्यपि वा प्राजापत्यां प्राजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहेति तदा आत्मानं यजमानञ्च स्वेन रसेन समर्द्धयत्यथ यद्दै किं च यज्ञे मृण्मयं भिद्येत तदभिमृशेद्भूमिर्भूमिमगान्माता मातरमप्यगाद्भूयास्म पुत्रैः पशुभिर्योऽस्मान् द्वेष्टि स भिद्यतामिति तदा आत्मानञ्च यजमानञ्च स्वेन रसेन समर्द्धयति ॥ ६ ॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके षष्ठखण्ड ।

श्लोण इव वा एतत् सोमं राजानं प्रवहन्ति यदेन मभिषुण्वन्ति तस्यैतामनुसारणीं कुर्वन्ति यत्सौम्यं चरुं तस्मात् पुरुषाय पुरुषायानुसारणी क्रियते साध्याना वै देवानां सत्रमासीनानां शर्करा अक्षसु जज्ञिरे ते इन्द्र मुपनिषेदुः अथ नु तेषां शर्करा अक्षसु जायेरन यां स्त्वं विद्या इति तेभ्य एतत्सौम्यं चरुं श्रपयमाज्य प्राय च्छत्तदवैक्षन्त ते प्रापश्यन् प्रपश्यत्यनन्धो भवति य एवं विद्वान्सौम्यं चरुमवेक्षते योऽलमन्नाद्याय सन्नन्नाद्याद् दक्षिणार्धं सदसो गत्वैतं सौम्यातिश्रेष प्राश्नीयाज्जन वा एतस्मादन्नाद्यं क्रामति योऽलमन्नाद्याय सन्नन्नाद्यो भवति जनो अस्मात्पितरो जन्यैनैवान्यैनान्नमत्त्यन्नादो भवति ॥७॥

इति षड्विंशब्राह्मणे प्रथम प्रपाठके सप्तमखण्ड ।

## इति प्रथमः प्रपाठकः ।

ओम् । प्रजापति रकामयत बहु स्यां प्रजायेयेति स

एताꣳ रेतस्यामृचꣳ साम्ना प्रच्छन्नामगायद् यद्वच प्रसाम्नी
मगास्यदस्थ्यमाꣳसमजनिष्यत यत्सामामृचं माꣳसमन-
स्थिकमजनिष्यतच्छꣳसाम्ना प्रच्छन्नां गायति तस्मात् पुरुषः
प्रच्छन्नो माꣳसेन त्वचा लोम्ना जायते त्रिरुद्गृह्णाति त्रय
इमे लोका एषां लोकानामवरुध्यै त्रिभ्यश्च रेतः सिच्यते
न हिं कुर्याद् वज्रो वै हिङ्कारो बलमिव रेतो यद्धिङ्-
कुर्याद् वज्रेण हिङ्कारेण रेतः सिक्तं विच्छिन्द्यादेतस्या
छन्दसा प्राजापत्या देवतया सर्वमितया ध्यायन् गायेत्
सर्वꣳ ह्रीदꣳ रेतो द्वितीया गायति तस्या द्वे अक्षरे सम्प्र-
यतो व्यतिषजति मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथमं
व्यतिषक्तौ प्राणापानौ प्रजा दधतो गायत्रीच्छन्दसाऽऽग्नेय्या
देवतया पृथिवीमितया ध्यायन् गायेत् तृतीयां गायति
तां बलवदिवोग्रमिव गायति तस्या द्वे उत्तरार्धेऽक्षरे द्योत-
यति चक्षुरेव तद्युनक्ति तस्माद्युक्तं चक्षुस्त्रिष्टुप्छन्दसैन्द्री
देवतयान्तरिक्षमितया ध्यायन् गायेच्चतुर्थीं गायति तस्या-
श्चत्वारि चत्वार्यक्षराणि निक्रोडयन्निव गायत्या द्वादशभ्यो-
ऽक्षरेभ्यो द्वादशाक्षरपदा जगती पशवो वै जगती पशु
ष्वेव प्रति तिष्ठति तस्याश्चत्वार्युत्तमार्धेऽक्षराणि द्योतयति
श्रोत्रमेव तद्युनक्ति तस्माद्युक्तꣳ श्रोत्रꣳ श्रोत्रे द्वे प्रति
श्रवणे द्वे तस्मात् पुरुषः सर्वा दिश शृणोत्यपि पराङ्सन्
प्रत्यञ्चꣳ शृणोति जगतीच्छन्दसा सौरीदेवतया दिवमितया-
ध्यायन् गायेत् पञ्चमीं गायति तान्निनर्दन्निव गायत्याह
बहुतमात् पुरुषादसमत्वनाढ्यो भवति य एवं वेद निरुक्तां
चानिरुक्तां च गायति निरुक्तेन वै वाचो भुङ्क्ते निरुक्त-

मन्था उपजीवन्ति भुङ्क्ते वाचमुपैनां जीवति य एवं वेदानुष्टुप्छन्दसा प्राजापत्या देवतया सर्वमेतया ध्यायन् गायेत् सर्वꣳह्येद प्रजापत्यꣳयज्ञो गायति तस्या द्वे द्वे अक्षरे उदासं गायत्या षड्भ्योऽक्षरेभ्यः षड्वृतव ऋतु ष्वेव प्रति तिष्ठति पङ्क्ति छन्दसा सौमोदेवतया दिश एतया ध्यायन् गाये दिह्येव च वा एष इह्येव च मनसा गच्छति यो गायते प्रातःसवने त्रिष्टुभङ्गायति जगतीं गायत्यनुष्टुभङ्गायति पङ्क्तिं गायत्यास्ते गायत्रं ह्रे गायति प्राणमेव तदभ्येति प्राणो हि गायत्रं पन्थानमेव तदभ्येति पन्था हि गायत्रꣳरथन्तरवर्णामुत्तमां गायति यं वै रथन्तरमस्यामेव प्रति तिष्ठति ॥ १ ॥

इति षड्विंशब्राह्मणे द्वितीय प्रपाठके प्रथमखण्डः ।

ता वा एता देवलोकाय युज्यन्ते यत्पराच्यः प्रतीच्यो मनुष्यलोकायैष वाव जात एषो वलप्त जरायुरेव आलिंजीनो यस्य धुरो गीयन्ते यद्येवं विद्वान्धुरो गायति जातमेवैनमन्नाद्याय परि ह्णन्त्युभावन्नमत्त उद्गाता च यजमानश्च या प्रथमा तामन्नाद्यं ध्यायन् गायेद्रेतस एव तस्मिन्नायानाद्य प्रतिदधाति न हि कुर्याद्यद्विद्युर्यादृ वर्मेण हिङ्कारेण रेतः सिक्तं विच्छिन्द्या द्रेतसाछन्दो युज्यते मनो धीयते या द्वितीया ता गायत्रीमागाङ्गायेꣳ स्तस्या द्वे अक्षरे सगयन्तो व्यतिषजति मध्यमस्य च षट्स्योत्तममुत्तमस्य च प्रथमं व्यतिषक्तौ प्राणापानौ प्रजा दधतो गायत्रीच्छन्दो युज्यते प्राणापानौ धीयेते या तृतीया तां त्रिष्टुभभागां गायꣳस्तस्या द्वे उत्तमादृक्षरे

द्योतयति चक्षुरेव तद्युनक्ति तस्माद् विरूपश्चक्षुः कृष्ण-
मन्यच्छुक्लमन्यत् त्रिष्टुप्छन्दो युज्यते चक्षुषी धीयेते या
चतुर्थी तां जगतीमागायेत्स्वस्यायतायुत्तमार्धे चराणि
द्योतयति श्रोत्रमेव तद्युनक्ति तस्माद्युक्तꣳ श्रोत्रꣳ श्रोत्रे
द्वे प्रतिश्रवणे द्वे तस्मादपि पराङवन् प्रत्यङ् शृणोति
जगतीच्छन्दो युज्यते श्रोत्रे धीयेते या पञ्चमी तामनुष्टु-
भमागां गायेच्चतुर्धा व्याहृत्य गायेच्चतुर्धा वा इदं पुरुषो
वीर्याय विहृतो जायते वीर्यायैवैनत्तद्व्याहृत्य गायत्युच्चाव-
चामिव गायेदुच्चावचेव हि वाक् सङ्गृह्णत्येव गायेत् स-
ङ्गृह्णत्येव हि वाचं पुरुषो वदत्यनुष्टुप्छन्दो युज्यते वाग्
धीयते या षष्ठी तां पङ्क्तिमागायेत्तस्या द्वे द्वे
अक्षरे उदासङ्गायत्यापङ्क्तयोऽक्षरेभ्यः षडृतव ऋतुष्वेव
प्रति तिष्ठति पङ्क्तिश्छन्दो युज्यते समानोदानौ धीयेते
भूरिति प्रथमाया धुरो निधनꣳ रेतसो ह्यधि सञ्जायते
समिति द्वितीयाया रेतसो ह्यधि सम्भव स्वरिति तृती
याया प्रस्वर्गं लोकं जानातोडेति चतुर्थ्याः पशवो वा इडा
पशुष्वेव प्रति तिष्ठति वागिति पञ्चम्याः सर्वा अग्निन्
पुण्या वाचो वदन्ति य एव वेद या प्रथमा तां गाय
च्छ्येव गायेदायत इव ह्ययं प्राणो या द्वितीया
तां पीपिपीमिव गायेद् पीपीव ह्ययमपानो या तृतीया
तामुदच्छमिव गायेदुदुत इव ह्ययं प्राणो या चतुर्थी
तान्निक्रीडयन्निव गायन्निक्रीडित इव ह्ययं व्यानो या पञ्चमी
तान्विरुक्तानि वक्तामिव गायेद्विरुक्तानि दक्ष इव ह्ययꣳ
समानो या षष्ठी तामुदासमिव गायेदुदस्त इव ह्यय

मुदानो यच्छन्नु रथन्तरवर्णासुत्तमाङ्गाढे दिय यै रथन्तर मस्यामेव प्रतितिष्ठति ॥ २ ॥

इति षड्विंशब्राह्मणे द्वितीयप्रपाठके द्वितीयखण्डः।

देवाश्च वा असुराश्चेषु लोकेष्वस्पर्द्धन्त ते देवाः प्रजापति-मुपाधावंस्तेभ्य एतान्धुरः प्राणान् प्रायच्छन्मनः प्रथममथ प्राणमथ चक्षुरथ श्रोत्रमथ वाचं ताभ्यः पञ्चभ्यो धूर्भ्यः पुरु-षञ्च पशूंश्च निरभिमीत तेन पुरुषेणासुरानधूर्वन् यद-धूर्वंस्तद्धुरां धूर्त्वं धूर्वति पाप्मानं भ्रातृव्यं य एवं वेद यो वै धुरां धूर्त्वं वेद धुरा धुरा भ्रातृव्याद्वसीयान् भव-त्येतद्वै धुरां धूर्त्वं यं नाना वीर्या नाना रूपा नाना छन्दस्या नाना देवत्याः समानं हिंकार मभि सम्पद्यन्त एतद्वै धुरा धूर्त्वं धुर्वति पाप्मानं भ्रातृव्यं य एवं वेद यो वै धूर्षु महाव्रतं वेद सर्वा अस्मिन् पुण्या वाचो वदन्ति शिरो गायत्र्युरस्त्रिष्टुब्मध्यं जगती पादावनुष्टु-प्सर्वा अस्मिन् पुण्या वाचो वदन्ति य एवं वेद यो वा एष धुरो विद्वानयासां व्रतं चरत्यागमिष्यतोऽस्य पूर्वेद्युः पुण्या कीर्त्ति रागच्छति सुरभिरेव गन्धो गायत्र्या व्रतं दर्शनीय त्रिष्टुभः श्रवणीयं जगत्या यदेव वाचा पुण्यं वदति तदनुष्टुभ स्तदु सर्वासां व्रतं तदु विद्वान् स माद्य इति नो वादी रिति तदन्नाद्यस्य यस्य वै धुरो विगीतास्तस्य स-ङ्गीता यस्य वा एता अहिष्यमाने विगीयान्तराश्चेषु सङ्गायन्ति तस्य वै धुरो विगीता स्तस्य सङ्गीता यः कामं-यैतैकधा यजमानं यश ऋच्छेद्यथादिष्टं प्रजाः स्युरिति ह्रीतुराञ्चे गाये देकधा यजमान यश ऋच्छेद यथादिष्टं

ह्वयस्वेत्युचे दापो मे होतायं सिनस्ते नोपह्वयन्तां होता यंसिन उपमाह्वयध्वमित्युचे रश्मयो मे चमसाध्वर्यवस्ते मोपमाह्वन्तां चमसाध्वर्यव उपमाह्वयध्वमित्युचे स्तामा एता देवता ऋत्विजा मेव वाग्भि रुपह्वयन्ते स उपह्नतो भक्षयति प्राणो यजमानोऽग्नी यवैतासां देवतानां लोक स्तदुपह्नतो भवति ॥ ५ ॥

इति षड्विंशब्राह्मणे द्वितीय-प्रपाठके पञ्चमखण्डः ।

स माध्यन्दिने सवने सवनमुखीयेष्वाहुतेपूपहवमिच्छते वाङ्मे होता स मोपह्वयतां होत रुपमाह्वयस्वेत्युचे चक्षुर्मेऽध्वर्युः समोपह्वयता मध्वर्यु प ह्वयस्वेत्युचे: श्रोत्र म उद्गाता समोपह्वयतामुद्गातरुपमाह्वयस्वेत्युचेऽयोऽयमन्तश्चक्षुषाकाशः स मे सदस्य. समोपह्वयतां सदस्योपमाह्वयस्वेत्युचे या इमा अन्तश्चापस्ते मे होतायं सिन स्ते मोपह्वयतां होतायंसिन उपमाह्वयध्व मित्युचे रङ्गानि मे चमसाध्वर्यव स्ते मोपह्वयन्तां चमसाध्वर्यव उपमाह्वयध्व मित्युचे स्ता वा एता देवता ऋत्विजा मेव वाग्भि रुपह्वयन्ते स उपह्नतो भक्षयत्यपानो यजमानोऽग्नी यवैतासां देवतानां लोक स्तदुपह्नतो भवति ॥ ६ ॥

इति षड्विंशब्राह्मणे द्वितीयप्रपाठके षष्ठखण्डः ।

स तृतीयसवने सवनमुखीयेष्वा हुतेपूपहव मिच्छते प्राणो मे होता स मोपह्वयतां होत रुपमाह्वय स्वेत्युचे रपानो मेऽध्वर्युः स मोपह्वयता मध्वर्य उपमाह्वयस्वेत्युचे र्व्यानो मे ब्रह्मा स मोपह्वयतां ब्रह्मन्नुपमाह्वयस्वेत्युचे:

समानो म उद्गाता स मोपह्वयतां मुद्गात रुपमाह्वयस्वेत्युर्वे

र्योयमन्तः पुरुष आकाशः स मे सदस्य. स मोपह्वयताएं

सदस्योपमाह्वयस्वेत्युर्वे या इमा अन्तः पुरुष आप स्ते मे

होत्राशएंसिनस्ते मोपह्वयन्ताएंहोत्राशएंसिन उपमाह्वयध्व

मित्युर्वे लोमानि मे चमसाध्वर्यवस्ते मोपह्वयन्तां चमसाध्व

र्यव उपमाह्वयध्वमित्युर्वेता वा एता देवता ऋत्विजो भेय

वाग्भि रुपह्वयन्ते स उपहूतो भक्षयत्युद्गाता यजमानो-

ऽथो यत्रै तासां देवताना लोकस्तदुपहूतो भवति सर्वेषां

वषट्कर्त्ता चमसं भक्षये द्देवानां वा एतद्यज्ञस्य मुखं यदु-

द्गातृचमसं तस्मा दुद्गातृचमस नान्यो भक्षयेदेव विदुषो ह

वै यज्ञो न व्यथत एव विदुषो ह वै यजमानस्य स्वर्ग्यं

पुत्र पशव्य मिष्ट भवत्येव विद्वान् ह वै यजमानो

द्विषन्तं भ्रातृव्य मभिभवत्यथवा भर्ता यो यज्ञे हीनं

कुर्यात् ॥ ७ ॥

इति षड्विंशब्राह्मणे द्वितीयप्रपाठके सप्तमखण्डः ।

यद्धोता जहाति वागेव तद्यजमानं जहाति स यत्तत्

करोति स्वां वाचं यजमाने दधाति स विष्वङ् वाचा-

मुष्मिँल्लोके सम्भवति यदध्वर्युर्जहाति चक्षुर्ह तद्यजमानं

जहाति स यत्तत् करोति स्वचक्षुर्यजमाने दधाति स विष्वङ

चक्षुषामुष्मिँल्लोके सम्भवति यद्ब्रह्मा जहाति मनो ह तद्यज-

मानं जहाति स यत्तत् करोति स्वं मनो यजमाने दधाति

स विष्वङ्मनसामुष्मिँल्लोके सम्भवति यदुद्गाता जहाति

श्रोत्रएंह तद्यजमानं जहाति स यत्तत् करोति स्वएं श्रोत्रं

यजमाने दधाति स विष्वङ् श्रोत्रेणामुष्मिँल्लोके सम्भवति

यत्तदृक्थ्यो जहात्यात्मा ह तद्यजमानं जहाति स यत्तत् करोति स्वमात्मानं यजमाने दधाति स विष्वङ्ङात्मनामुष्मिं लोके सम्भवति यदीवाग्रप्रसितौ जहत्यङ्गानि ह तद्यजमानं जहति ते यत्तत् कुर्वन्ति स्वान्यङ्गानि यजमाने दधति ते विष्वञ्चोऽङ्गैरमुष्मिंल्लोके सम्भवन्ति यच्चमसाध्वर्यवो जहति लोमानि ह तद्यजमानं जहति ते ते यत्तत्कुर्वन्ति स्वानि लोमानि यजमाने दधाति ते विष्वञ्चो लोमभिरमुष्मिंल्लोके सम्भवन्ति तस्मादेवं विद्वान् होता न कुर्य्यादयथा मत ऋत्विजामेव विज्ञानं पश्यो ह्यध्वर्युमनु कीर्त्तिर्होतारं योगक्षेमो ब्रह्माणमात्मा च प्रजा चोद्गातारम् ।८॥

इति षड्विंशब्राह्मणे द्वितीयप्रपाठके अष्टमखण्डः ।

स यदि पशुता व्याधीयेताध्वर्युर्म इदमकरिति विद्यादथ यद्येन पापिका कीर्त्तिरनूदियाद्धोता म इदमकरिति विद्यादथ यद्यस्य योगक्षेमो व्यथेत ब्रह्मा म इदमकरिति विद्यादथ यद्यात्मना वा प्रजया वा व्याधीयेतोद्गाता म इदमकरिति विद्यात् प्राणदेवत्यो वै ब्रह्मा वाग्देवत्या इतर ऋत्विज स यदि मन्येत ब्रह्मा म इदमकरिति हरितं हिरण्यं दर्भनाध्या गवध्य कुश वधाय चतुर्गृहीतमाज्यं गृहीत्वा जुहुयान्नमः प्राणाय वाचस्पतये स्वाहेति यद्यु वा इतरे नमो वाचे प्राणपत्न्यै स्वाहेति यद्यौतरो यदि वेतरे सर्वेष्वेवानुपर्य्यायं जुहुयान्नमः प्राणाय वाचस्पतये स्वाहा नमो वाचे प्राणपत्न्यै स्वाहेत्यथ तद्धिरण्यं ब्रह्मणे दद्यादथ यदाह यशो वाव यशस्य माय-

शीताश्मऽसिन स्तो मे देवयजन ददातु शीताशमऽसिनौ देवयजन मे दत्तेत्यृचे रश्मयो मे चमसाध्वर्यव स्तो मे देवयजन ददतु चमसाध्वर्यवो देवयजन मे दत्तेत्यृचे स्ता वा एता देवता ऋत्विजामेव याभिर्देवयजन ददाति स दत्ते यजते यदुन्नत भूम्या अनूपर यत्र बहुला ओषधयथा लालमारिणो यत्राप ब्युत्स्य न पुरस्ताद्देवयजनमात मति शिष्याद् यावाश्छस्या प्रामोवरपुरमा हासात्या पीयाऽसो भवन्ति यस्येव मति रेचयन्ति काम दक्षिणत आगामुकादैन दक्षिणा भवन्ति काम पश्चादवरपुरमा हास्माश्चेयाऽसो भवन्ति काममुत्तरत उत्तराहैन देव यज्योपनामुकाभवत्युत्तरोत्तरिणी हास्य श्रीर्भवति यस्य पुरस्तात त्रीणि ज्योतीऽपि हश्येरन्नग्निराप आदित्य स्तद्दे-वयजन तच्छिशुक्रिय पुरस्ताच्चित देवयजन पश्चाच्चित श्म शानकरण प्रागुदक्प्रवण न्देवयजन पराद्दक्षिणाप्रवण श्म शानकरण यथा वै दक्षिण पाणिरेव देवयजन यथा सव्य स्तथा श्मशानकरण यथा श्मशानकरणतयाभिचरणीयाना देवयजन मप्यु हैक आहुर्येषितेव यक्षिऽध देशे श्रद्द-धानो यजत नश्नोत्येवेति ॥ १० ॥

इति षड्विंशब्राह्मण द्वितीय प्रपाठके दशमखण्ड ।

## इति द्वितीयः प्रपाठकः ।

---

यावान्यस्मै रसो भवति तेनात एव प्राचीन प्रचरन्त्यथै-तदा तयाम परिशिष्यत तज्जोपमत्तमाद न तस्मै यदुपयेवा-

हिङ्कारोऽर्द्धमासाः प्रस्तावो मासा आदि फल्गुनस्य उद्गीथः पौर्णमास्यः प्रतिहारोऽष्टका उपद्रवो मावास्या निधनं तस्य वा एतत् सवत्सरस्य साम्नो वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनं तस्माद्धेमन्तं प्रजा निधनकृता इवासते निधनरूपमिवैतर्हि तदाहुः कान्दिश मवभृथ मभ्यवेयुरिति प्राञ्चो भ्यवेयुर्देवानां वा एषा दिग्यत् प्राचो वा देवानां दिक्कान्नोनुयन्तः सन्तिष्ठाता इति दक्षिणाभ्यवेयुः पाप्मानएहैव हन्ति यो यजते तमिमं पाप्मानएहतं दक्षिणाहराणीति पितृणां वा एषा दिग्यद्दक्षिणा वा पितृणां दिक् तान्नोनुयन्तः सन्तिष्ठाता इति प्रत्यञ्चो भ्यवेयुर्मनुष्याणां वा एषा दिग्यत् प्रतीचो वा मनुष्याणां दिक्कान्नोनुयन्तः सन्तिष्ठाता इत्युदञ्चो भ्यवेयुर्नक्षत्राणां वा एषा दिग्यदुदीचो वा नक्षत्राणां दिक्कान्नोनुयन्तः सन्तिष्ठाता इत्यतो वावयतमथेव कथमया चापः स्वस्तटभ्यवेयुर्यद्दे विद्वान् कर्म्म करोत्यस्मादिदमिति वसीयानेव तेन भवति तदाहुः स्रवन्तीष्वभ्यवेयू३ स्थावरासू३ इति स्रवन्तोष्वभ्यवेयु. पाप्मानएहैव हन्ति यो यजते तमिमं पाप्मानएह तमापः प्रवहन्तामिति स्थावरायाः ग्रीष्मस्यास्त्वभ्यवेयुरितो मा यज्ञो विक्षुब्धः प्रत्युपतिष्ठाता इत्यतो वावयतरयैकत रया चाप स्वस्तादभ्यवेयुर्यद्दे विद्वान् कर्म्म करोत्यस्मादिदमिति वसोयानेव तेन भवति ॥ १ ॥

इति षड्विंशब्राह्मणे तृतीय-प्रपाठके प्रथमखण्डः।

एकस्यै हिङ्करोति स प्रथमया तिसृभ्यो हिङ्करोति स मध्यमया पञ्चभ्यो हिङ्करोति स उत्तमयैकस्यै हिङ्करोति

स प्रथमया तिसृभ्यो हिङ्करोति स पराचीभि पञ्चभ्यो हि
ङ्करोति स एकया स एकया स तिसृभि रिपुमिहतो विष्टुति
रभिचरेत् स्तुवीतानीक प्रथमेपुर्दनुजर्गो यत्तिस्र सन्दधाति
त्र्येव पञ्चभि सृजते स्तृणुते भ्रातृव्य वसीयाए आत्मना
भवति य एतया स्तुते ॥ २ ॥

इति षडविंशब्राह्मणे तृतीयप्रपाठके द्वितीयखण्ड ।

तिसृभ्यो हिङ्करोति स पराचीभि तिसृभ्यो हिङ्करोति
स पराचीभिर्नवभ्या हिङ्करोति स तिसृभि स तिसृभि
स तिसृभिरभिचरत्स्तुवीत वज्रो वै त्रिवृद् वज्रस्त्रिणवो य
त्त्रिवृत्त्रिणवाभ्या पञ्चदश विदधाति वज्रमेव तत्सम्यक्
सन्दधाति एवमेव वै वज्र साधुर्यदारम्भणतोऽणीयान प्रह
रणत स्थवीयाएस्तेन पाप्मान भ्रातृव्यएस्तिरणुते वसीयाए
आत्मना भवति य एतया स्तुते ॥ ३ ॥

इति षडविंशब्राह्मणे तृतीयप्रपाठके तृतीयखण्ड ।

एतयैवाभिचरत्स्तुवीत वज्रो वै त्रिवृद् वज्र पञ्चदशो
वज्र स्त्रिणवो यत्त्रिवृत्पञ्चदश त्रिणवै सप्तदश विदधाति वज्र-
मेव तत्सम्यक सन्दधात्येव मिव वै वज्र साधुर्यदारम्भणतो
णीयान प्रहरणत स्थवीयाएस्तेन पाप्मान भ्रातृव्याए
स्तिरणुते वसीयाए आत्मना भवति य एतया स्तुते ॥ ४ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके चतुर्थखण्ड ।

तिसृभ्यो हिङ्करोति स पराचीभिर्नवभ्यो हिङ्करोति
स तिसृभि स तिसृभि स तिसृभिर्नवभ्यो हिङ्करोति स
तिसृभि स तिसृभि स तिसृभिरभिचरत्स्तुवीत वज्रो वै
त्रिवृद्वज्र स्त्रिणवो यत्त्रिवृत्त्रिणवाभ्यामेकविंशं विदधाति

वज्रमेव तत्भ्रम्यक् सन्दधात्येवमेव वै वज्र. साधुयेदारम्भ-
र्ता गीयान् ग्रहरणत: स्वधीयाःस्तेन पाप्मान भ्रातृव्यः
स्त्रिणुते वसीयाः आत्मना भवति य एतया स्तुते ॥ ५ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके पञ्चमखण्ड: ।

नवभ्यो हिङ्करोति स तिसृभि: स तिसृभि. स तिसृ-
भिर्नवभ्यो हिङ्करोति स तिसृभि: स तिसृभि स तिसृभि-
र्नवभ्यो हिङ्करोति स तिसृभि स तिसृभि. स तिसृभि रभि-
परतस्तुवीत वज्रो वै त्रिणवो वज्र मेव तत्परावृत्य प्रवर्त्तयति
स्तृत्यै तेन पाप्मान भ्रातृव्यःस्त्रिणुते वसीयाःआत्मना
भवति य एतया स्तुते ॥ ६ ॥

इति षड्विंशब्राह्मणे तृतीय-प्रपाठके षष्ठखण्ड: ।

स्वरान्त. प्रथम स्त्रिरात्रो गायत्री प्राणो वै गायत्री
प्रजापति: स्वर: प्रजापति मेवाप्नोति निधनान्तो द्वितीय
त्रिष्टुब्वीर्यं वै त्रिष्टुप् त्रिष्टुभ: पुरुष: पुरुष मेवाप्नोतीडान्त
स्तृतीयो जगतो पशवो वा इडा पशवो जगतो जागता:
पशव. पशुने वाप्नोति प्रकृतच्छन्दा: प्रथम स्त्रिरात्र स्तेन सो
यातयामायोत्तरस्य छन्दाःसि व्यूहन्ति जगत्य: प्रतिपदो
भवन्ति जगतीनां लोके त्रिष्टुभ स्त्रिष्टुभां गायत्र्यस्तेन सो
यातयामायोत्तमस्य छन्दाःसि व्येवो हन्ति त्रिष्टुभ: प्रति-
पदो भवन्ति त्रिष्टुभां लोके जगत्यो जगतीनां गायत्र स्तेनो
एव सो यातयामाभि या एता अन्योन्यस्मै लोक मभ्य-
ध्यायन् काम मेवेना गमयत्याप्नोति तं काम यस्मै कामा-
यैव आह्रयत तस्माद् गुरौ न सहग्रहत स्त्र्यादिपरि-
षोतो वहीयाःसो भवत सामा दुभयतो दन्त. सन्दत्ते

तैयति स्तुत्वे वषट्कारनिधनं भवत्येष वै वज्रो यो ऽजिष्ठो यत्साम यजुश्च वषट्कारो वषट्कुर्वन्ति तमेवास्मै वज्रं प्रहरति स्तुत्वा उभे बृहद्रथन्तरे भवत उभाभ्यामेवास्मै बृहद्रथन्तराभ्यां वज्रं प्रहरति स्तुत्वै परार्धेषु रथन्तरं भवति परार्ध एवास्मै वज्रं प्रहरति स्तुत्वै तस्य रथन्तरं पृष्ठं बृहद्ब्रह्म सामैष वै साम यजुस्तमेवास्मै वज्रं प्रहरति स्तुत्वै य कामयेत जीवेदिति तस्य बृहत्पृष्ठं कुर्याद्रथन्तरं ब्रह्म साम क्षत्रं वै बृहत्पशवो रथन्तरं क्षत्रेणैवास्य पशून् हन्त्यपशुर्भवति जीवति य कामयेत परास्परावतमियान्न प्रतितिष्ठेदिति पवमाने रथन्तरं कुर्याद्बृहत्पृष्ठं भव ब्रह्म साम बृहद्रथन्तराभ्यामेवैनमेभ्यो लोकेभ्य उद्धृत्य श्वेन प्रज्ञापयति परास्परावतमेति न प्रतितिष्ठति वार्षाहरं पवमानमुखे भवत. सर्वोपगवे नानदं क्रूराणि सामानि सम्भरन्ति स्तुत्यै तैल्वको वा बाधको वा यूपस्स्फाय भवनभ्यो अधिपवणे अग्नये रुद्रवते लोहित: पशु: सादयन्त्युपाप्ध्वन्तयोमो शरमयं बर्हिः श्रौत्यै वैभीदक इध्मो शिथिल्यै लोहितोष्णीषा लोहित वाससो निवीता ऋत्विजः प्रचरन्ति स्तुत्यै नव नव दक्षिणा भवन्ति नवयन्त्येवैनं तत् ॥ ८ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके अष्टमखण्डः ।

त्रिवृदग्निष्टोमस्तस्येषु त्रिष्टुभि कृत्वाभिचरन्नजितेषु वधो वै पुरायुषो हन्ति यदिषु त्रिष्टुभि करोति पुरैवैनमायुषः प्रहयति त्रिवृद्वै स्तोमानां क्षेपिष्ठो यम्भिद्भवत्याग्नी यज्ञियज्ञा इति वषट्कारनिधनं भवति सत एव भवत्या

सप्तमात् पुरुषा दशायतनो भवति यमेतेनाभिचरन्ति समानमितरच्छ्येनेन ॥ ८ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके नवमखण्डः ।

अथैष सन्दंशेनाभिचरन्यजेत यद्वै दुरादानꣳसन्दंशेन तदादत्ते यद् द्वौ द्वौ स्तोमौ स इव यथाह दुरादानꣳसन्दंशेनात्तु छाया दद्यात्तेन मेवैन मेवेनादत्ते त्रिवृतꣳस्तोमꣳ सम्पद्यते बृहती छन्दोऽथ वज्रो वै त्रिवृत्पशवो बृहती वज्रेणैवास्य पशून्हन्त्यपशुर्भवति वैरूपं भवति अस्रमेवैनं करोति परिष्टुब्धं भवति पर्येवैनं स्तृणाति सार्पाहरे पवमानमुखे भवत. काशी तौपगवे नानदꣳसाम क्रूराणि सामानि सम्भरन्ति स्तृत्यै त्रिसन्दंशस्ते न क्रूरः समानमितरच्छ्येनेन ॥ १० ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके दशमखण्डः ।

अथैष वज्रेणाभिचरन् यजेत वज्रेणैवास्मै वज्रं प्रहरति स्तृत्यै सर्वः पञ्चदशो भवति वज्रो वै पञ्चदशस्तमेवास्मै वज्रं प्रहरति स्तृत्या उक्थ्य, षोडशिमान् भवति पशवो वा उक्थानि वज्रः षोडशी वज्रेणैवास्मै वज्रं प्रहरति स्तृत्यै तस्य महानाम्न्य, षोडशि साम भवति वज्रो वै महानाम्न्यो वज्र. षोडशी वज्रेणैवास्मै वज्रं प्रहरति स्तृत्यै समानमितरत् पूर्वेण ॥ ११ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके एकादशखण्डः ।

अतिरात्रश्चतुर्विंशं प्रायणीय महरभिजिच्च स्वरसामानो दिवाकीर्त्य महरन्य स्वरसामानो विश्वजिन्महाव्रत- मतिरात्रय विश्वेदेवाः सत्रमासत सोमेन राज्ञा सह-

प्रतिमा तेऽब्रुवंत्सोम एव नो राजा सर्वत्र विभवेदिति तस्मात्सोमो राजा सर्वाणि नक्षत्राण्युपैति सोमो हि रेतोधा नवाहए संवत्सरस्य गर्भमुपयन्ति नवाहो वै संवत्सरस्य प्रतिमा नव प्राणाः प्राणानेवावरुन्धते प्रजावन्तो ओषधा ज्योतिष्मत्यश्च पती य एता उपयन्ति ॥ १२ ॥

इति षड्विंशब्राह्मणे तृतीयप्रपाठके द्वादशखण्डः ।

## इति तृतीयः प्रपाठकः ।

---

ओम् । प्रजापतिस्तपोऽतप्यत तस्य ह वै तप्यमानस्य मन· प्राजायत देवांत्सृजेयमिति तद्दे देवा असृजन्त दिवा देवानसृजत नक्त मसुरान् यद्दिवा देवानसृजत तद्देवानां देवत्वं यदसुर्य्यं तदसुराणामसुरत्वं यत्पीतत्वं तत्पितृणां देवा वै स्वर्गकामास्तपोऽतप्यन्त तेषां तप्यमानानाए रसो-जायत पृथिव्यन्तरिक्ष द्यौरिति ते अभ्यतपएस्तेषां तप्य-मानानाए रसोजायत ऋग्वेदः पृथिव्या यजुर्वेदोऽन्तरिक्षात् सामवेदोऽमुष्मात्ते अभ्यतपएस्तेषां तप्यमानानाए रसो-जायत ऋग्वेदाद्गार्हपत्यो यजुर्वेदाद्दक्षिणाग्निः सामवेदा-दाहवनीय स्ते अभ्यतपएस्तेषां तप्यमानाना पुरुषो जायत सहस्रशीर्षाः सहस्राक्षः सहस्रपात्ते देवाः प्रजापति मुप मुवन् वेदशरीरैर्वा इदमस्तशरीरं न ह वा इद मल्यो. ममाप्सातेति तं ब्रुवन् को नामासीति स होवाच यज्ञो नामेति तेषां प्रजापतिः सर्वो यज्ञस्त्वा सुपैति सर्वो ह वा एष यज्ञसएस्था सुपैति यद्गार्हपत्यं प्राद्रुष्करोति सा

दीक्षणीया यद्दक्षिणाग्निं चाहवनीयञ्च सा प्रायणीया
यत्समिधोऽभ्यादधाति ता उपसदीय यस्याज्य मुत्पूतꣳ
स्कन्दति सा वै स्कन्नानामाहुतिस्ततो वै यजमानः प्रनायु-
र्भवति वरो देयः सेयं तस्य प्रायश्चित्तिरथ यस्याज्य मनुत्-
पूतꣳस्कन्दत्यसौ वाऽअस्कन्नानामाहुतिस्ततो वै यजमानस्य
चित्तं प्रमायुर्भवति चित्रन्देयꣳ सैव तस्य प्रायश्चित्तिर्यन्नाहृ-
पत्ये जुहोति तत्प्रातः सवनं यद्दक्षिणाग्नौ जुहोति तत्तृ-
तीयसवनं यन्मार्जयते सोऽस्यावभृथो यद्दत्वा ददाति तेनो-
दयनीयस्योदवसानीयस्य समाप्त्या अथ यस्याग्निर्मथ्यमानो
न जायेतान्यमाहृत्याग्निमवक्षाये जुहुयाद्ब्राह्मणस्य वा हस्ते
ऽजस्य वा कर्णे कुशस्तम्बे वाप्सु वा जुहुयादन्यैः शतहुतान्
होमानेकः शिष्यहुतो वरं शिष्यैः शतहुतान् होमानेकः
पुत्रहुतो वरं पुत्रैः शतहुतान् होमानेको ह्यात्महुतो वरं
स्वयं होता स्वयं दोग्धा स्वयमेवोपतिष्ठेताग्निहोत्रं होम्य-
मेयं दक्षिणा सर्वैर्ह वा एतस्य यज्ञक्रतुभिरिष्टं भवति य
एवं विद्वानग्निहोत्रं जुहोति ॥ १ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके प्रथमखण्डः ।

प्रजापतिर्वा एतमेवं सहस्रसꣳवत्सर मसृजत तेषां प्र-
जापतिः सहस्रसꣳवत्सर गवामयनेवाहन्यद्गवामयनं द्वाद-
शाहे द्वादशाहमतिरात्रेऽतिरात्रꣳषोडशिनि षोडशिन मु-
क्थ्य उक्थ्यमग्निष्टोमे ऽग्निष्टोममिष्टिपशुबन्धयोरिष्टिपशुब-
न्धावग्निहोत्रे सर्वैर्ह वा एतस्य यज्ञक्रतुभिरिष्टं भवति य एवं
विद्वानग्निहोत्रं जुहोति ॥ २ ॥

इति षड्विंशब्राह्मणे चतुर्थप्रपाठके द्वितीयखण्डः ।

